### वासुदेवमन्त्रस्य ऋष्यादिन्यासध्यानानि

**अथ वासुदेवमन्त्रस्य—ततः प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा शिरसि प्रजापतिऋषये नमः, मुखे गायत्रीछन्दसे नमः, हृदये श्रीवासुदेवदेवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा मूलेन करयोर्व्यापकं कृत्वा, ॐ हृदयाय नमः, नमो शिरसे स्वाहा, भगवते शिखायै वषट्, वासुदेवाय कवचाय हुं, नमो भगवते वासुदेवाय अस्त्राय फट्।**

**ततः समाहितो भूत्वा वासुदेवं हृदि स्मरेत्। मध्येदुग्धाम्बुधि द्वीपे दिव्ययोषानिषेविते ॥१॥**
**तत्र सञ्चिन्त्य विपिनमखिलर्तुनिषेवितम्। तन्मध्ये कल्पवृक्षं च दिव्यमद्भुतदर्शनम् ॥२॥**
**तस्याधस्ताद्रत्नमञ्चकमलं विमलप्रभम्। शरत्पूर्णेन्दुविलसत्प्रभापटलराजितम् ॥३॥**
**तत्र सञ्चिन्तयेद्देवं वासुदेवं स्मिताननम्। कुन्देन्द्वाभं गदाचक्रपद्मशङ्खलसत्करम् ॥४॥**
**चन्द्रायुतलसत्कान्त्या मोहयन्तं जगत्त्रयम्। केयूराङ्गदसंराजद्दोर्दण्डं रत्नभूषणम् ॥५॥**
**श्रीवत्साङ्कं लसद्रत्नमुकुटं कौस्तुभान्वितम्। अरविन्ददलाताम्रसुरम्यायतलोचनम् ॥६॥**
**कुण्डलप्रोल्लसद्गण्डमण्डलं पीतवाससम्। ग्रैवेयहारसंशोभिकम्बुकण्ठं सुकङ्कणम् ॥७॥**
**विशालवक्षःसंराजत्प्रफुल्लवनमालकम्। सनकादिमुनीन्द्रैश्च तत्त्वनिर्णयकाङ्क्षया ॥८॥**
**निषेवितं दित्यदितिजातगन्धर्वसञ्चयैः। सिद्धविद्याधराश्चैव सेवितं च महोरगैः ॥९॥**

**इति ध्यात्वा जपादिकं विदध्यात्।**

२. **वासुदेव मन्त्र**—प्रातःकृत्यादि योगपीठन्यास के बाद मूल मन्त्र से तीन प्राणायाम करे। विनियोग करे—शिरसि प्रजापति ऋषये नमः। मुखे गायत्री छन्दसे नमः। हृदये वासुदेवदेवतायै नमः। इस प्रकार न्यास करके सर्वाभीष्टावाप्ति के लिये विनियोग किया जाता है, तदनन्तर हाथों को जोड़कर मूल मन्त्र से व्यापक न्यास करे। हृदयादि न्यास करे—ॐ हृदयाय नमः। नमो शिरसे स्वाहा। भगवते शिखायै वषट्। वासुदेवाय कवचाय हुं। नमो भगवते वासुदेवाय अस्त्राय फट्।

समाहित चित्त होकर हृदय में वासुदेव का स्मरण करे। वे क्षीरसागर के द्वीप में दिव्य योषिताओं से सेवित हैं। उसमें समस्त ऋतुओं से निषेवित विपिन है। उसमें दिव्य अद्भुत दर्शन कल्पवृक्ष है। उसके नीचे कमल विमल प्रभायुक्त रत्नमञ्च है। शरत्पूर्णिमा के चाँद के समान प्रभा पटल से सुशोभित है। उस पर मुस्कुराते हुए वासुदेव स्थित हैं। कुन्द इन्दु के समान उनकी आभा है। गदा चक्र पद्म शङ्ख उनके चारो हाथों में शोभित है। वासुदेव का ध्यान इस प्रकार किया जाता है—

चन्द्रायुतलसत्कान्त्या मोहयन्तं जगत्त्रयम्। केयूराङ्गदसंराजद्दोर्दण्डं रत्नभूषणम्॥
श्रीवत्साङ्कं लसद्रत्नमुकुटं कौस्तुभान्वितम्। अरविन्ददलाताम्रसुरम्यायतलोचनम्॥
कुण्डलप्रोल्लसद्गण्डमण्डलं पीतवाससम्। ग्रैवेयहारसंशोभिकम्बुकण्ठं सुकङ्कणम्॥
विशालवक्षःसंराजत्प्रफुल्लवनमालकम्। सनकादिमुनीन्द्रैश्च तत्त्वनिर्णयकाङ्क्षया॥
निषेवितं दित्यदितिजातगन्धर्वसञ्चयैः। सिद्धविद्याधराश्चैव सेवितं च महोरगैः॥

इस प्रकार ध्यान के बाद जपादि करे।

### वराहमन्त्रस्य ऋष्यादिन्यासध्यानानि

**अथ वराहमन्त्रस्य—ततः प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा शिरसि भार्गवाय ऋषये नमः, मुखेऽनुष्टुप्छन्दसे नमः, हृदये श्रीवराहदेवतायै नमः, इति विन्यस्य मम सर्वाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, एकशृङ्गाय हृदयाय नमः, व्योमोल्काय शिरसे स्वाहा, तेजोऽधिपतये शिखायै वषट्, विश्वरूपाय कवचाय हुं, महादंष्ट्रायास्त्राय फट्, इति पञ्चाङ्गमन्त्रान् विन्यस्य ध्यायेत्। ध्यानम्—**

**जानोः पदावधि सुवर्णनिभं च नाभेराजानु चन्द्रधवलं च गलाद्धृदन्तम्।**
**वह्निप्रभं शशिनिभं शिरसो गलान्तं मौलिस्थलाद्वियत एन्दुनिभं च कान्तम्॥१॥**
**संविभ्रतं करतलैररिशङ्खखड्गान् खेटं गदां तदनु शक्तिाराभयानि।**
**सर्वंसहाधरणशोभिसदेकदंष्ट्रमाद्यं वराहमनिशं प्रभजे स्वचित्ते॥२॥**

**इति ध्यात्वा 'ॐ नमो भगवते वराहरूपाय भूर्भुवःस्वर्पतये भूपतित्वं मे देहि ददापय स्वाहा' अयं मन्त्रो योज्यः।**

**३. वराह मन्त्र**—प्रातःकृत्यादि योग-पीठन्यास के बाद मूल मन्त्र से तीन प्राणायाम करे। विनियोग करे—शिरसि भार्गवाय ऋषये नमः। मुखे अनुष्टुप् छन्दसे नमः। हृदये श्रीवराहदेवतायै नमः। मम सर्वाभीष्टसिद्धये विनियोगः। हृदयादि न्यास करे—एकशृङ्गाय हृदयाय नमः। व्योमोल्काय शिरसे स्वाहा। तेजोधिपतये शिखायै वषट्। विश्वरूपाय कवचाय हुं। महादंष्ट्रायास्त्राय फट्। तदनन्तर निम्नवत् ध्यान करे—

जानोः पदावधि सुवर्णनिभं च नाभेराजानु चन्द्रधवलं च गलाद्धृदन्तम्।
वह्निप्रभं शशिनिभं शिरसो गलान्तं मौलिस्थलाद्वियत एन्दुनिभं च कान्तम्।।
संविभ्रतं करतलैररिशङ्खखड्गान् खेटं गदां तदनु शक्तिाराभयानि।
सर्वंसहाधरणशोभिसदेकदंष्ट्रमाद्यं वराहमनिशं प्रभजे स्वचित्ते।।

ध्यान के बाद मन्त्र का जप करे। मन्त्र है—ॐ नमो भगवते वराहरूपाय भूर्भुवःस्वःपतये भूपतित्वं मे देहि ददापय स्वाहा। दीक्षाङ्ग जप-होम-पूजन में यह मन्त्र योज्य है।

### विष्णुमन्त्रस्य ऋष्यादिन्यासध्यानानि

**अथ विष्णोः—ततः प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा शिरसि कपिलाय ऋषये नमः, मुखे गायत्र्यै छन्दसे नमः, हृदये श्रीभोगवामनाय देवतायै नमः, इति विन्यस्य मम सर्वाभीष्टावाप्तये विनियोगः, इति कृताञ्जलिरुक्त्वा ॐ नमो हृदयाय नमः, भगवते शिरसे स्वाहा, विष्णवे शिखायै वषट्, सुरपतये कवचाय हुं, महाबलाय नेत्राभ्यां वौषट्, स्वाहास्त्राय फट्, इति षडङ्गमन्त्रान्विन्यस्य ध्यायेत्। ध्यानम्—**

**नीलवर्णश्चतुर्बाहुः शङ्खचक्रगदाब्जधृक्। सर्वान् भोगान् ददात्येष भक्तानां भोगवामनः॥१॥**

**इति ध्यात्वा 'ॐ नमो भगवते विष्णवे सुरपतये महाबलाय स्वाहा' इति।**

**४. विष्णु मन्त्र**—प्रातःकृत्य, प्राणायामादि सम्पन्न करने के बाद इस प्रकार न्यास करे—शिरसि कपिलाय ऋषये नमः, मुखे गायत्र्यै छन्दसे नमः, हृदये श्रीभोगवामनाय देवतायै नमः। इस प्रकार न्यास करके सर्वाभीष्टावाप्ति के लिये विनियोग किया जाता है। तदनन्तर ॐ नमो हृदयाय नमः, भगवते शिरसे स्वाहा, विष्णवे शिखायै वषट्, सुरपतये कवचाय हुं, महा-बलाय नेत्राभ्यां वौषट्, स्वाहास्त्राय फट्—इस प्रकार षडङ्ग न्यास के बाद निम्नवत् ध्यान करे—

नीलवर्णश्चतुर्बाहुः शङ्खचक्रगदाब्जधृक्। सर्वान् भोगान् ददात्येष भक्तानां भोगवामनः।।

ध्यान के बाद 'ॐ नमो भगवते विष्णवे सुरपतये महाबलाय स्वाहा' मन्त्र का जप करे।

### श्रीकरमन्त्रस्य ऋष्यादिन्यासध्यानानि

**अथ श्रीकरमन्त्रस्य—ततः प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा शिरसि वामदेवाय ऋषये नमः, मुखे पंक्तिच्छन्दसे नमः, हृदये श्रीकराय देवतायै नमः, इति विन्यस्य मम सर्वाभीष्टावाप्तये विनियोगः, इति कृताञ्जलिरुक्त्वा उं भीषय भीषय हुं हृदयाय नमः, त्तिं त्रासय त्रासय हुं शिरसे स्वाहा, ष्ठं मर्दय मर्दय हुं शिखायै वषट्, श्रीं प्रध्वंसय प्रध्वंसय हुं कवचाय हुं, कं रक्षय रक्षय हुं अस्त्राय फट्। ततः नेत्रयोः रं, उदरे स्वां, पृष्ठे हां इति विन्यस्य ध्यायेत्।**

**ततः सञ्चिन्तयेद्विष्णुं श्रीकरं हृदयाम्बुजे। लोलकल्लोलजालेन फेनिले सोर्मिमालके ॥१॥**
**दुग्धाम्बुधावत्र मध्ये द्वीपं शुक्लमयं शुभम्। हेमस्थलीसमाकीर्णं नानामणिगणं शुभम् ॥२॥**
**वनं सञ्चिन्तयेत्तत्र सकलर्तुनिषेवितम्। कल्पद्रुमसमूहैश्च वारितातपमुत्तमम् ॥३॥**
**षट्पदालीकलारावसङ्कुलं लोलपल्लवम्। पुष्पव्रजपरागौघतुषारपरिपूरितम् ॥४॥**
**हिरण्मयानां वृक्षाणां मणिपुष्पेषु चञ्चलम्। इन्दिन्दिरालिक्रमणशीलशक्रमणीरुचम् ॥५॥**
**अङ्गीकरोति यत्रापि रमन्तेऽप्सरसः सुरैः। औदार्यशोभनैश्वर्यसौभाग्यादिगुणैर्युतैः ॥६॥**
**रूपाभिराममधुराकृतिभिः सुकुमारकैः। मन्दस्मितलसद्दन्तमरीचिद्योतिताननाः ॥७॥**
**मनोज्ञा जितचन्द्राभा मदस्फुरितलोचनाः। जल्पाकपुंस्कोकिलोद्यद्देववृन्दं निरन्तरम् ॥८॥**
**उन्निद्रितोद्यन्मदनाः पीनस्तनघटालसाः। सुश्रोणिभारादत्यर्थमन्दगामिन्य उत्तमाः ॥९॥**
**एवंभूताश्चाप्सरसः क्रीडन्ते यत्र चामरैः। मारसेनापतिरिव वनलक्ष्म्या गृहं यथा ॥१०॥**
**जन्मस्थानमृतूनां च कल्ववृक्षतरोरधः। इन्दिरायाः सोदरस्य नवरत्नमयस्य च ॥११॥**
**शिखावलिसमुद्द्योतिशीतलस्य तले शुभे। स्वर्णकुट्टिमसंशोभिमहारत्नमनोरमे ॥१२॥**
**उद्यदर्कप्रभाभास्वत्पीठसन्निहितस्य च। प्रसिद्धविक्रमौघस्य पक्षिराजस्य चोपरि ॥१३॥**
**उपविष्टं गालिताच्छशुचिहाटकसन्निभम्। रत्नोद्यन्मकराकारचारुकुण्डलमण्डितम् ॥१४॥**
**किरीटमणिसन्दीप्तदिक्चक्रं चारुभूषणम्। शशिखण्डलसच्छुभ्रक्लृप्तामलविशेषकम् ॥१५॥**
**अतिचञ्चलसच्चिल्लिं मुकुटोज्ज्वलगण्डकम्। स्मितसंशोभिवक्त्रेन्दुकपोलफलकोज्ज्वलम् ॥१६॥**
**दशनावलिरश्म्यौघविराजितशुभाधरम्। पक्वबिम्बाधरं रम्यरक्तपद्मपलाशवत् ॥१७॥**
**आयतारुणनेत्रं च सम्यक्पक्ष्मविराजितम्। उरुहारमणिव्रातदीधितिप्रोल्लसद्गलम् ॥१८॥**
**दिव्यरत्नाङ्गदद्योतिबाहुजालधरं हरिम्। गदाकमलशङ्खारिधारिणं बाहुदण्डकैः ॥१९॥**
**कपाटविपुलेनाथ कमलानिलयेन च। लसत्कौस्तुभदीप्त्योघविद्योतितततलेन च ॥२०॥**
**वक्षसा सुविराजन्तं त्रैलोक्यनिलयेन च। त्रिवलीशोभिना सम्यग्रोमराजिलसद्रुचा ॥२१॥**
**उदरेण विराजन्तं रम्यं कटितटेन च। पीतपट्टांशुकरुचा विलसन्मणिमेखलम् ॥२२॥**
**शरतूणसदृक्पीनरम्योरुपरिभूषितम्। केकिकण्ठलसत्कान्तिजङ्घायुगमनोहरम् ॥२३॥**
**रक्तोत्पलाभचरणं पादाग्रजितकच्छपम्। शशरक्तसदृक्कान्तिध्वजाब्जाङ्कितपत्तलम् ॥२४॥**
**करसद्रक्तकमलरमयालिङ्गितं सदा। क्षमया चोपगूढं च नवमाणिक्यशोभितम् ॥२५॥**
**नवयौवनकान्त्योघसंशोभिसकलाङ्गकम्। सुरासुरर्षिप्रमुखैः सेवितं चाप्सरोगणैः ॥२६॥**
**पूर्णेन्दुबिम्बसदृशवितानसमलंकृतम्। सुरयोषाकराब्जालिलसच्चामरराजितम् ॥२७॥**
**विद्युल्लतासंविलोलवैजयन्तीसुशोभितम्। यक्षविद्याधरव्यूहचारणादिनिषेवितम् ॥२८॥**

**इत्येवं ध्यात्वा, 'उत्तिष्ठ श्रीकर स्वाहा'। अयं मन्त्रो (षोडशार्णायां) योज्यः।**

५. **श्रीकरमन्त्र**—प्रातःकृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—शिरसि वामदेवाय ऋषये नमः, मुखे पंक्तिच्छन्दसे नमः, हृदये श्रीकराय देवतायै नमः। इस प्रकार न्यास करके सर्वाभीष्टावाप्ति के लिये विनियोग किया जाता है। तदनन्तर उं भीषय भीषय हुं हृदयाय नमः, त्तिं त्रासय त्रासय हुं शिरसे स्वाहा, ष्ठं मर्दय मर्दय हुं शिखायै वषट्, श्रीं प्रध्वंसय प्रध्वंसय हुं कवचाय हुं, कं रक्षय रक्षय हुं अस्त्राय फट्—इस प्रकार षडङ्ग न्यास करके नेत्रों में 'रं' से उदर में 'स्वां' से एवं पृष्ठ में 'हां' से न्यास करने के बाद इस प्रकार ध्यान करे—

ततः सञ्चिन्तयेद्विष्णुं श्रीकरं हृदयाम्बुजे। लोलकल्लोलजालेन फेनिले सोर्मिमालके॥
दुग्धाम्बुधावत्र मध्ये द्वीपं शुक्लमयं शुभम्। हेमस्थलीसमाकीर्णं नानामणिगणं शुभम्॥
वनं सञ्चिन्तयेत्तत्र सकलर्तुनिषेवितम्। कल्पद्रुमसमूहैश्च वारितातपमुत्तमम्॥

षट्पदालीकलारावसङ्कुलं लोलपल्लवम्। पुष्पव्रजपरागौघतुषारपरिपूरितम्।।
हिरण्मयानां वृक्षाणां मणिपुष्पेषु चञ्चलम्। इन्दिन्दिरालिक्रमणशीलशक्रमणीरुचम्।।
अङ्गीकरोति यत्रापि रमन्तेऽप्सरस: सुरै:। औदार्यशोभनैश्वर्यसौभाग्यादिगुणैर्युतै:।।
रूपाभिराममधुराकृतिभि: सुकुमारकै:। मन्दस्मितलसद्दन्तमरीचिद्योतितानना:।।
मनोज्ञा जितचन्द्राभा मदस्फुरितलोचना:। जल्पाकपुंस्कोकिलोद्यद्देववृन्दं निरन्तरम्।।
उन्निद्रितोद्यन्मदना: पीनस्तनघटालसा:। सुश्रोणिभारादत्यर्थमन्दगामिन्य उत्तमा:।।
एवंभूताश्चाप्सरस: क्रीडन्ते यत्र चामरै:। मारसेनापतिरिव वनलक्ष्म्या गृहं यथा।।
जन्मस्थानमृतूनां च कल्पवृक्षतरोरध:। इन्दिराया: सोदरस्य नवरत्नमयस्य च।।
शिखावलिसमुद्द्योतिशीतलस्य तले शुभे। स्वर्णकुट्टिमसंशोभिमहारत्नमनोरमे।।
उद्यदर्कप्रभाभास्वत्पीठसन्निहितस्य च। प्रसिद्धविक्रमौघस्य पक्षिराजस्य चोपरि।।
उपविष्टं गालिताच्छशुचिहाटकसन्निभम्। रत्नोद्यन्मकराकारचारुकुण्डलमण्डितम्।।
किरीटमणिसन्दीप्तदिक्चक्रं चारुभूषणम्। शशिखण्डलसच्छुभ्रक्लृप्तामलविशेषकम्।।
अतिचञ्चलसच्चिल्लिं मुकुटोज्ज्वलगण्डकम्। स्मितसंशोभिवक्त्रेन्दुकपोलफलकोज्ज्वलम्।।
दशनावलिरश्म्यौघविराजितशुभाधरम्। पक्वविम्बाधरं रम्यरक्तपद्मपलाशवत्।।
आयतारुणनेत्रं च सम्यक्पक्ष्मविराजितम्। उरुहारमणिव्रातदीधितिप्रोल्लसद्गलम्।।
दिव्यरत्नाङ्गदद्योतिबाहुजालधरं हरिम्। गदाकमलशङ्खारिधारिणं बाहुदण्डकै:।।
कपाटविपुलेनाथ कमलानिलयेन च। लसत्कौस्तुभदीप्त्योघविद्योतिततलेन च।।
वक्षसा सुविराजन्तं त्रैलोक्यनिलयेन च। त्रिवलीशोभिना सम्यग्रोमराजिलसद्रुचा।।
उदरेण विराजन्तं रम्यं कटितटेन च। पीतपट्टांशुकरुचा विलसन्मणिमेखलम्।।
शरतूणसदृक्पीनरम्योरुपरिभूषितम् । केकिकण्ठलसत्कान्तिजङ्घायुगमनोहरम् ।।
रक्तोत्पलाभचरणं पादाग्रजितकच्छपम्। शशरक्तसदृक्कान्तिध्वजाब्जाङ्कितपत्तलम्।।
करसद्रक्तकमलरमयालिङ्गितं सदा। क्षमया चोपगूढं च नवमाणिक्यशोभितम्।।
नवयौवनकान्त्योघसंशोभिसकलाङ्गकम्। सुरासुरर्षिप्रमुखै: सेवितं चाप्सरोगणै:।।
पूर्णेन्दुबिम्बसदृशवितानसमलंकृतम् । सुरयोषाकराब्जालिलसच्चामरराजितम् ।।
विद्युल्लतासंविलोलवैजयन्तीसुशोभितम् । यक्षविद्याधरव्यूहचारणादिनिषेवितम् ।।

ध्यान के बाद 'उत्तिष्ठ श्रीकर स्वाहा' मन्त्र को षोड़शाक्षर से योजित करके दीक्षाङ्ग पूजन-जप-हवन करे।

## नृसिंहमन्त्रस्य ऋष्यादिन्यासध्यानानि

**अथ नृसिंहमन्त्र:—तत: प्रात:कृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा शिरसि ब्रह्मणे ऋषये नम:, मुखेऽनुष्टुप्छन्दसे नम:, हृदये श्रीनृसिंहदेवतायै नम:, इति विन्यस्य मम सर्वाभीष्टसिद्धये विनियोग:, इति कृताञ्जलिरुक्त्वा, उग्रं वीरं हृदयाय नम:, महाविष्णुं शिरसे स्वाहा, ज्वलन्तं सर्वतोमुखं शिखायै वषट्, नृसिंहं भीषणं कवचाय हुं, भद्रं मृत्युमृत्युं नेत्रत्रयाय वौषट्, नमाम्यहं अस्त्राय फट्, इति विन्यस्य ध्यायेत्—**

**नृसिंहं भजे जानुविन्यस्तबाहुं त्रिनेत्रं भुजप्रोल्लसच्चक्रशङ्खम्।**
**कृशानूपमज्योतिषा ग्रस्तदैत्यं शिर:शोभिदंष्ट्रासुदीप्तद्विजिह्वम्॥१॥**

**इति ध्यात्वा, 'उग्रं वीरं महाविष्णुं ज्वलन्तं विश्वतोमुखम्। नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम्' इति मन्त्रो योज्य:।**

**६. नृसिंह मन्त्र**—प्रातःकृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—शिरसि ब्रह्मणे ऋषये नमः, मुखेऽनुष्टुप्छन्दसे नमः, हृदये श्रीनृसिंहदेवतायै नमः। इस प्रकार न्यास करके सर्वाभीष्टसिद्धि के लिये विनियोग किया जाता है। तदनन्तर उग्रं वीरं हृदयाय नमः, महाविष्णुं शिरसे स्वाहा, ज्वलन्तं सर्वतोमुखं शिखायै वषट्, नृसिंहं भीषणं कवचाय हुं, भद्रं मृत्युमृत्युं नेत्रत्रयाय वौषट्, नमाम्यहं अस्त्राय फट् इस प्रकार न्यास करके निम्नवत् ध्यान करे—

नृसिंहं भजे जानुविन्यस्तबाहुं त्रिनेत्रं भुजप्रोल्लसच्चक्रशङ्खम्।
कृशानूपमज्योतिषा ग्रस्तदैत्यं शिरःशोभिदंष्ट्रासुदीप्तद्विजिह्वम्।।

ध्यान के बाद इस मन्त्र का जप करे—'उग्रं वीरं महाविष्णुं ज्वलन्तं विश्वतोमुखम्। नृसिंहभीषणं भद्रं मृत्युमृत्युं नमाम्यहम्'। इसी मन्त्र को दीक्षाङ्ग पूजन-जप-हवन में योजित करे।

### गोपालमन्त्रस्य ऋष्यादिन्यासध्यानानि

**अथ गोपालमन्त्रः—ततः प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि नारदाय ऋषये नमः, मुखे विराट्छन्दसे नमः, हृदये श्रीकृष्णाय देवतायै नमः, गुह्ये क्लींबीजाय नमः, पादयोः स्वाहाशक्तये नमः, सर्वाङ्गे कृष्णाय प्रकृतये नमः, हृदि श्रीदुर्गायै अधिष्ठात्र्यै देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, कृताञ्जलिरुक्त्वा मूलेन करयोर्व्यापकं कृत्वा, आचक्राय स्वाहा हृदयाय नमः, विचक्राय स्वाहा शिरसे स्वाहा, सुचक्राय स्वाहा शिखायै वषट्, त्रैलोक्यरक्षणचक्राय स्वाहा कवचाय हुं, असुरान्तचक्राय स्वाहा अस्त्राय फट् इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—**

**दरारिचापसद्बाणगुणांशुककराम्बुजम् । वेणुमादाय हस्ताभ्यां वादयन्तं मुदान्वितम् ।।१।।**
**रविमण्डलगं कृष्णं ध्यायेदिष्टफलाप्तये ।**

**इति ध्यात्वा 'क्लींकृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा' इति मन्त्रो योज्यः।**

**७. गोपाल मन्त्र**—प्रातःकृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—शिरसि नारदाय ऋषये नमः, मुखे विराट्-छन्दसे नमः, हृदये श्रीकृष्णाय देवतायै नमः, गुह्ये क्लींबीजाय नमः, पादयोः स्वाहाशक्तये नमः, सर्वाङ्गे कृष्णाय प्रकृतये नमः, हृदि श्रीदुर्गायै अधिष्ठात्र्यै देवतायै नमः। इस प्रकार न्यास करके सर्वाभीष्टसिद्धि के लिये विनियोग किया जाता है। तदनन्तर मूल मन्त्र से व्यापक न्यास करके आचक्राय स्वाहा हृदयाय नमः, विचक्राय स्वाहा शिरसे स्वाहा, सुचक्राय स्वाहा शिखायै वषट्, त्रैलोक्यरक्षणचक्राय स्वाहा कवचाय हुं, असुरान्तचक्राय स्वाहा अस्त्राय फट्—इस प्रकार षडङ्ग न्यास करके निम्नवत् ध्यान करे—

दरारिचापसद्बाणगुणांशुककराम्बुजम्। वेणुमादाय हस्ताभ्यां वादयन्तं मुदान्वितम्।।

ध्यान के बाद 'क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा' इस अष्टादशाक्षर मन्त्र को दीक्षाङ्ग क्रिया में जोड़े।

### कृष्णमन्त्रस्य ऋष्यादिन्यासध्यानानि

**अथ कृष्णमन्त्र—ततः प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि नारद ऋषये नमः, मुखे गायत्रीच्छन्दसे नमः, हृदये श्रीकृष्णदेवतायै नमः, गुह्ये क्लींबीजाय नमः, इत्यादि विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, पूर्णज्ञानात्मने हृदयाय नमः, पूर्णैश्वर्यात्मने शिरसे स्वाहा, पूर्णप्रभात्मने शिखायै वषट्, पूर्णानन्दात्मने कवचाय हुं, पूर्णतेजआत्मने नेत्राभ्यां वौषट्, पूर्णशक्त्यात्मने अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—**

**ध्यायेद्धरिन्मणिनिभं जगदेकवन्द्यं सौन्दर्यसारमरिशङ्खवराभयानि ।**
**दोर्भिर्दधानमजितं सरमं च भैष्मीसत्यासमेतमखिलप्रदमिन्दिरेशम् ।।१।।**

**इति ध्यात्वा 'क्लीं कृष्णाय नमः' इति मन्त्रो योज्यः। योगस्तु—'ॐ हसकलह्रीं नमो हसकहलह्रीं नारायणाय सकलह्रीं'।।१।। 'ॐ हसकलह्रीं नमो हसकहलह्रीं भगवते सकलह्रीं वासुदेवाय'।।२।। 'ॐ नमो भगवते**

**हसकलह्रीं वराहरूपाय हसकहलह्रीं भूर्भुव:स्वर्पतये सकलह्रीं भूपतित्वं मे देहि ददापय स्वाहा'॥३॥ 'ॐ नमो भगवते हसकलह्रीं विष्णवे हसकहलह्रीं सुरपतये सकलह्रीं महाबलाय स्वाहा'॥४॥ 'उत्तिष्ठ हसकलह्रीं श्रीकर हसकहलह्रीं स्वाहा सकलह्रीं'॥५॥ 'उग्रं वीरं महाविष्णुं हसकलह्रीं ज्वलन्तं सर्वतोमुखं हसकहलह्रीं नृसिंहभीषणं भद्रं सकलह्रीं मृत्युमृत्युं नमाम्यहम्'॥६॥ 'क्लींकृष्णाय हसकलह्रीं गोविन्दाय हसकहलह्रीं गोपीजन-वल्लभाय सकलह्रीं स्वाहा'॥७॥ 'क्लीं हसकलह्रीं कृष्णाय हसकहलह्रीं नम: सकलह्रीं'॥८॥ एवं योग इत्यर्थ:।**

**८. कृष्णमन्त्र**—प्रात:कृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—शिरसि नारद ऋषये नम:, मुखे गायत्रीच्छन्दसे नम:, हृदये श्रीकृष्णदेवतायै नम:—गुह्ये क्लींबीजाय नम:, इस प्रकार न्यास करके अपने अभीष्टसिद्धि के लिये विनियोग किया जाता है। तदनन्तर पूर्णज्ञानात्मने हृदयाय नम:, पूर्णैश्वर्यात्मने शिरसे स्वाहा, पूर्णप्रभात्मने शिखायै वषट्, पूर्णानन्दात्मने कवचाय हुं, पूर्णतेजआत्मने नेत्राभ्यां वौषट्, पूर्णशक्त्यात्मने अस्त्राय फट्—इस प्रकार षडङ्ग न्यास करके निम्नवत् ध्यान करे—

ध्यायेद्धरिन्मणिनिभं जगदेकवन्द्यं सौन्दर्यसारमरिशङ्खवराभयानि।
दोर्भिर्दधानमजितं सरमं च भैष्मीसत्यासमेतमखिलप्रदमिन्दिरेशम्।।

क्लीं कृष्णाय नम:' मन्त्र को दीक्षाङ्ग मन्त्रों में जोड़े। योजन का प्रकार यह है—

१. ॐ हसकलह्रीं नमो हसकहलह्रीं नारायणाय सकलह्रीं।
२. ॐ हसकलह्रीं नमो हसकहलह्रीं भगवते सकलह्रीं वासुदेवाय।
३. ॐ नमो भगवते हसकलह्रीं वराहरूपाय हसकहलह्रीं भूर्भुव:स्वर्पतये सकलह्रीं भूपतित्वं मे देहि ददापय स्वाहा।
४. ॐ नमो भगवते हसकलह्रीं विष्णवे हसकहलह्रीं सुरपतये सकलह्रीं महाबलाय स्वाहा।
५. उत्तिष्ठ हसकलह्रीं श्रीकर हसकहलह्रीं स्वाहा सकलह्रीं।
६. उग्रं वीरं महाविष्णुं हसकलह्रीं ज्वलन्तं सर्वतोमुखं हसकहलह्रीं नृसिंहभीषणं भद्रं सकलह्रीं मृत्युमृत्युं नमाम्यहम्।
७. क्लींकृष्णाय हसकलह्रीं गोविन्दाय हसकहलह्रीं गोपीजनवल्लभाय सकलह्रीं स्वाहा।
८. क्लीं हसकलह्रीं कृष्णाय हसकहलह्रीं नम: सकलह्रीं।

### वैदिकदर्शनमन्त्रस्य ऋष्यादिन्यासध्यानानि

**वैदिकदशनि तु मन्त्रानाह—तत: प्रात:कृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा अस्य श्रीगायत्रीमन्त्रस्य शिरसि विश्वामित्राय ऋषये नम:, मुखे गायत्र्यै च्छन्दसे नम:, हृदये श्रीपरमात्मने देवतायै नम:, इति विन्यस्य ममा-भीष्टसिद्धये विनियोग:, इति कृताञ्जलिरुक्त्वा, तत्सवितुर्ब्रह्मात्मने हृदयाय नम:, वरेण्यं विष्णवात्मने शिरसे स्वाहा, भर्गोदेवस्य रुद्रात्मने शिखायै वषट्, धीमहि ईश्वरात्मने कवचाय हुं, धियो यो न: सदाशिवात्मने नेत्रत्रयाय वौषट्, प्रचोदयात् परमात्मने अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—**

**मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम्।**
**गायत्रीं वरदाभयाङ्कुशकरां शूलं कपालं गुणं शङ्खं चक्रमथारविन्दुयुगलं हस्तैर्वहन्तीं भजे॥१॥**

**इति ध्यात्वा, 'तत्सवितुवरेण्यं हसकलह्रीं भर्गो देवस्य धीमहि हसकहलह्रीं धियो यो न: सकलह्रीं प्रचोदयात्'।**

**गायत्री**—प्रात:कृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—शिरसि विश्वामित्राय ऋषये नम:, मुखे गायत्र्यै च्छन्दसे नम:, हृदये श्रीपरमात्मने देवतायै नम:। इस प्रकार न्यास करके अपने अभीष्टसिद्धि के लिये विनियोग किया जाता है। तदनन्तर तत्स-वितुर्ब्रह्मात्मने हृदयाय नम:, वरेण्यं विष्णवात्मने शिरसे स्वाहा, भर्गोदेवस्य रुद्रात्मने शिखायै वषट्, धीमहि ईश्वरात्मने कवचाय हुं, धियो यो न: सदाशिवात्मने नेत्रत्रयाय वौषट्, प्रचोदयात् परमात्मने अस्त्राय फट्—इस प्रकार षडङ्ग न्यास करके निम्नवत् ध्यान करे—

मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम्।
गायत्रीं वरदाभयाङ्कुशकरां शूलं कपालं गुणं शङ्खं चक्रमथारविन्दुयुगलं हस्तैर्वहन्तीं भजे।।

लोपामुद्रा पञ्चदशी में ब्रह्मगायत्री का योजन इस प्रकार होता है—तत्सवितुर्वरेण्यं हसकलह्रीं भर्गो देवस्य धीमहि हसकहलह्रीं धियो यो नः सकलह्रीं प्रचोदयात्।

**अथ जातवेदसे मन्त्रस्य—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा अस्य जातवेदमन्त्रस्य शिरसि मारीचपुत्रकश्यपाय ऋषये नमः, मुखे त्रिष्टुप्छन्दसे नमः, हृदये श्रीजातवेदाग्नये दुर्गायै देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, जातवेदसे सुनवाम हृदयाय नमः, सोममरातीयतो शिरसे स्वाहा, निदहाति वेदः शिखायै वषट्, स नः पर्षदति कवचाय हुं, दुर्गाणि विश्वा नावेव नेत्रत्रयाय वौषट्, सिन्धुं दुरितात्यग्निः अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—**

**विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम्।**
**हस्तैश्चक्रगदासिखेटविशिखांश्चापं गुणं तर्जनीं विभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां स्मरेत्॥१॥**

**इति ध्यात्वा, 'जातवेदसे सुनवाम सोमं हसकलह्रीं अरातीयतो निदहाति वेदः हसकहलह्रीं स नः पर्षदति दुर्गाणि विश्वा नावेव सकलह्रीं सिन्धुं दुरितात्यग्निः'।**

**२. जातवेदस मन्त्र**—प्रातःकृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—शिरसि मारीचपुत्रकश्यपाय ऋषये नमः, मुखे त्रिष्टुप्छन्दसे नमः, हृदये श्रीजातवेदाग्नये दुर्गायै देवतायै नमः। इस प्रकार न्यास करके अपने अभीष्टसिद्धि के लिये विनियोग किया जाता है। तदनन्तर जातवेदसे सुनवाम हृदयाय नमः, सोममरातीयतो शिरसे स्वाहा, निदहाति वेदः शिखायै वषट्, स नः पर्षदति कवचाय हुं, दुर्गाणि विश्वा नावेव नेत्रत्रयाय वौषट्, सिन्धुं दुरितात्यग्निः अस्त्राय फट्—इस प्रकार षडङ्ग न्यास करके निम्नवत् ध्यान करे—

विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम्।
हस्तैश्चक्रगदासिखेटविशिखांश्चापं गुणं तर्जनीं विभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां स्मरेत्।।

लोपामुद्रा पञ्चदशी में जातदेवस का योजन इस प्रकार होता है—जातवेदसे सुनवाम सोमं हसकलह्रीं अरातीयतो निदहाति वेदः हसकहलह्रीं स नः पर्षदति दुर्गाणि विश्वा नावेव सकलह्रीं सिन्धुं दुरितात्यग्निः।

**अथ तामग्निवर्णामिति मन्त्रस्य—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा ऋष्यादीन् प्राग्वद्विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, ह्रां हृदयाय नमः, ह्रीं शिरसे स्वाहा, ह्रूं शिखायै वषट्, ह्रैं कवचाय हुं, ह्रौं नेत्रत्रयाय वौषट्, ह्रः अस्त्राय फट्, इति विन्यस्य प्राग्वद् ध्यात्वा 'तामग्निवर्णां तपसा ज्वलन्तीं हसकलह्रीं वैरोचनीं कर्मफलेषु जुष्टां हसकहलह्रीं दुर्गां देवीं शरणमहं प्रपद्ये सकलह्रीं सुतरसि तरसे नमः' इति जपेत्।**

**३. तामग्निवर्णां मन्त्र**—प्रातःकृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—ह्रां हृदयाय नमः, ह्रीं शिरसे स्वाहा, ह्रूं शिखायै वषट्, ह्रैं कवचाय हुं, ह्रौं नेत्रत्रयाय वौषट्, ह्रः अस्त्राय फट्। इसके पश्चात् निम्नवत् ध्यान करे—

विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम्।
हस्तैश्चक्रगदासिखेटविशिखांश्चापं गुणं तर्जनीं विभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां स्मरेत्।।

लोपामुद्रा पञ्चदशी में तामग्निवर्णां का योजन इस प्रकार किया जाता है—तामग्निवर्णां तपसा ज्वलन्तीं हसकलह्रीं वैरोचनीं कर्मफलेषु जुष्टां हसकहलह्रीं दुर्गां देवीं शरणमहं प्रपद्ये सकलह्रीं सुतरसि तरसे नमः।

**अथाग्ने इत्यस्य प्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते ऋष्यादिषडङ्गन्यासं ध्यानं च प्राग्वत् विधाय 'अग्ने त्वं पारया नव्यो अस्मान् हसकलह्रीं स्वस्तिभिरति दुर्गाणि विश्वा हसकहलह्रीं पूश्च पृथिवी बहुला न उर्वी सकलह्रीं भवा तोकाय तनयाय शंयोः' इति जपेत्।**

**४. अग्ने त्वं पारया प्रयोग**—प्रातःकृत्य, प्राणायाम के बाद पूर्ववत् ऋष्यादि षडङ्ग न्यास एवं ध्यान करने के पश्चात्

'अग्ने त्वं पारया नव्यो अस्मान् हसकलह्रीं स्वस्तिभिरति दुर्गाणि विश्वा हसकहलह्रीं पूश्च पृथिवी बहुला न उर्वी सकलह्रीं भवा तोकाय तनयाय शंयो:' मन्त्र का जप करे।

**अथ विश्वानि न इत्यस्य प्रयोग:—तत्र प्रात:कृत्यादियोगपीठन्यासान्ते मूलमन्त्रेण प्राणायामत्रयं कृत्वा ऋष्यादिकरषडङ्गन्यासध्यानानि प्राग्वद्विधाय, 'विश्वानि नो दुर्गहा जातवेदः हसकलह्रीं सिन्धुं न नावा दुरितातिपर्षि हसकहलह्रीं अग्ने अत्रिवन्नमसा गृणानो सकलह्रीं अस्माकं बोध्यविता तनूनाम्' इति जपेत्।**

**५. विश्वानि मन्त्र का प्रयोग**—प्रात:कृत्य, प्राणायाम के बाद पूर्ववत् ऋष्यादि षडङ्ग न्यास एवं ध्यान करने के पश्चात् 'विश्वानि नो दुर्गहा जातवेद: हसकलह्रीं सिन्धुं न नावा दुरितातिपर्षि हसकहलह्रीं अग्ने अत्रिवन्नमसा गृणानो सकलह्रीं अस्माकं बोध्यविता तनूनाम्' का जप करे।

**अथ पृतनाजितमित्यस्य प्रयोग:-तत्र प्रात:कृत्यादिध्यानान्तं विधाय 'पृतनाजितं सहमानमुग्रं हसकलह्रीं अग्निं हुवेम परमात्सधस्तात् हसकहलह्रीं स न: पर्षदति दुर्गाणि विश्वा सकलह्रीं क्षामद्देवो दुरितात्यग्नि:'। तत: श्रीसूक्तदेवीसूक्ते ऋग्वेदे प्रसिन्द्धे।**

**६. पृतनाजित मन्त्र का प्रयोग**—प्रात:कृत्य, प्राणायाम के बाद पूर्ववत् ऋष्यादि षडङ्ग न्यास एवं ध्यान करने के पश्चात् 'पृतनाजितं सहमानमुग्रं हसकलह्रीं अग्निं हुवेम परमात्सधस्तात् हसकहलह्रीं स न: पर्षदति दुर्गाणि विश्वा सकलह्रीं क्षामद्देवो दुरितात्यग्नि:' का जप करे।

**शैवमन्त्रस्य ऋष्यादिन्यासध्यानानि**

**अथ शैवे प्रयोग:—तत्र प्रात:कृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि वामदेवाय ऋषये नम:, मुखे पंक्त्यै च्छन्दसे नम:, हृदये श्रीसदाशिवाय देवतायै नम:, इति विन्यस्य ममाभीष्टसिद्धये विनियोग:, इति कृताञ्जलिरुक्त्वा, सर्वज्ञाय हृदयाय नम:, नित्यतृप्ताय शिरसे स्वाहा, अनादिबोधाय शिखायै वषट्, स्वतन्त्राय कवचाय हुं, नित्यमलुप्तशक्तये नेत्रत्रयाय वौषट्, नित्यमनन्तशक्तये अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—**

**गोक्षीरफेनधवलं रजताद्रिसमप्रभम्। चारुचन्द्रकलाराजज्जटामुकुटमण्डितम् ॥१॥**
**पञ्चवक्त्रधरं शम्भुं प्रतिवक्त्रं त्रिलोचनम्। शार्दूलचर्मवसनं रत्नाभरणभूषितम् ॥२॥**

**इति ध्यात्वा, 'हसकलह्रीं ॐ हसकहलह्रीं नम: सकलह्रीं शिवाय' इति मन्त्रं जपेत्।**

**१. शैव मन्त्र प्रयोग**—प्रात:कृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—शिरसि वामदेवाय ऋषये नम:, मुखे पंक्त्यै च्छन्दसे नम:, हृदये श्रीसदाशिवाय देवतायै नम:। इस प्रकार न्यास करके अपने अभीष्टसिद्धि के लिये विनियोग किया जाता है। तदनन्तर सर्वज्ञाय हृदयाय नम:, नित्यतृप्ताय शिरसे स्वाहा, अनादिबोधाय शिखायै वषट्, स्वतन्त्राय कवचाय हुं, नित्यमलुप्तशक्तये नेत्रत्रयाय वौषट्, नित्यमनन्तशक्तये अस्त्राय फट्—इस प्रकार न्यास करके निम्नवत् ध्यान करे—

गोक्षीरफेनधवलं रजताद्रिसमप्रभम्। चारुचन्द्रकलाराजज्जटामुकुटमण्डितम् ।।
पञ्चवक्त्रधरं शम्भुं प्रतिवक्त्रं त्रिलोचनम्। शार्दूलचर्मवसनं रत्नाभरणभूषितम्।।

उक्त प्रकार से ध्यान करने के बाद 'हसकलह्रीं ॐ हसकहलह्रीं नम: सकलह्रीं शिवाय' मन्त्र का जप करे।

**अथाघोरास्त्रस्य प्रयोग:—तत्र प्रात:कृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि अघोराय ऋषये नम:, मुखे त्रिष्टुप्छन्दसे नम:, हृदये श्रीअघोररुद्राय देवतायै नम:, गुह्ये ह्रींबीजाय नम:, पादयो: हूं शक्तये नम:, इति विन्यस्य ममाभीष्टसिद्धये विनियोग:, इति कृताञ्जलिरुक्त्वा ह्रीं स्फुरस्फुर हृदयाय नम:, प्रस्फुरप्रस्फुर शिरसे स्वाहा, घोर घोरतर तनुरूप शिखायै वषट्, चटचट प्रचट प्रचट कवचाय हुं, कहकह वमवम नेत्रत्रयाय वौषट्, बन्धबन्ध घातयघातय हुं फट् अस्त्राय फट् इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—**

एवं न्यस्ततनुर्मन्त्री ध्यायेद्देवमनन्यधीः। कालमेघनिभं देवं भीमदंष्ट्रं त्रिलोचनम् ॥१॥
भुजङ्गभूषणं रक्तवसनालेपसंयुतम्। परशुं करवालं च बाणांस्त्रिशिखमेव च ॥२॥
दधानं दक्षिणैर्हस्तैरूर्ध्वादिक्रमतः परैः। डमरुं खेटकं चापं नृकपालं च पार्वति ॥३॥
काम्यकर्मसु रक्ताभमसितं चाभिचारके। निग्रहे ग्रहभूतादिमुक्त्यै मुक्तानिभं स्मरेत् ॥४॥ इति।

**एवं ध्यात्वा, 'ॐह्रींस्फुरस्फुर प्रस्फुरप्रस्फुर घोर घोरतर तनुरूप हसकलह्रीं चटचट प्रचटप्रचट कहकह हसकहलह्रीं वमवम बन्धबन्ध सकलह्रीं घायतघातय हुंफट्' इति मन्त्रं जपेत्।**

**२. अघोरास्त्र का प्रयोग**—प्रातःकृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—शिरसि अघोराय ऋषये नमः, मुखे त्रिष्टुप्छन्दसे नमः, हृदये श्रीअघोररुद्राय देवतायै नमः, गुह्ये ह्रींबीजाय नमः, पादयोः हूं शक्तये नमः। इस प्रकार न्यास करके अपने अभीष्टसिद्धि के लिये विनियोग किया जाता है। तदनन्तर ह्रीं स्फुरस्फुर हृदयाय नमः, प्रस्फुरप्रस्फुर शिरसे स्वाहा, घोर घोरतर तनुरूप शिखायै वषट्, चट चट प्रचट प्रचट कवचाय हुं, कहकह वमवम नेत्रत्रयाय वौषट्, बन्ध बन्ध घातयघातय हुं फट् अस्त्राय फट्—इस प्रकार न्यास करके निम्नवत् ध्यान करे—

कालमेघनिभं देवं भीमदंष्ट्रं त्रिलोचनम्। भुजङ्गभूषणं रक्तवसनालेपसंयुतम्॥
परशुं करवालं च बाणांस्त्रिशिखमेव च। दधानं दक्षिणैर्हस्तैरूर्ध्वादिक्रमतः परैः॥
डमरुं खेटकं चापं नृकपालं च पार्वति। काम्यकर्मसु रक्ताभमसितं चाभिचारके॥
निग्रहे ग्रहभूतादिमुक्त्यै मुक्तानिभं स्मरेत्।

ध्यान के बाद इस मन्त्र का जप करे—ॐह्रींस्फुरस्फुर प्रस्फुरप्रस्फुर घोर घोरतर तनुरूप हसकलह्रीं चटचट प्रचटप्रचट कहकह हसकहलह्रीं वमवम बन्धबन्ध सकलह्रीं घायतघातय हुंफट्।

**अथ शरभप्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि ब्रह्मणे ऋषये नमः, मुखे पंक्त्यै छन्दसे नमः, हृदये शरभशाल्वाय पक्षिराजाय देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, ॐ नमो भगवते हृदयाय नमः, शरभशाल्वाय शिरसे स्वाहा, पक्षिराजाय शिखायै वषट्, मम शत्रून्नाशय नाशय कवचाय हुं, हुंफट् नेत्रत्रयाय वौषट्, स्वाहा अस्त्राय फट्। ध्यानम्—**

**अष्टापदं पक्षतिमूलराजद्वज्राङ्कुरं हाटकपक्षकूटम्।**
**हेमाङ्गमङ्गीकृतपद्मरागं चञ्चूपुटोल्लासिमुखारबिन्दम् ॥१॥**
**सूर्यानलेन्दुद्युतिराजमाननेत्रत्रयोल्लासितपद्मरागम्।**
**नीलाश्मदीप्ताखिलरोमसङ्घं शीतांशुखण्डोज्ज्वलितोत्तमाङ्गम् ॥२॥**
**विप्राहिद्वन्द्वबद्धोत्तमकपिलजटाभारसञ्चारिगङ्गासङ्गा-**
**क्रान्तोत्तमाङ्गात् क्रमगलितपृषत्सङ्घहाराभिरामम्।**
**अग्रोद्यन्नागबन्धक्रमघटितसटाग्रन्थिपञ्चाङ्गुलोद्य-**
**त्पुच्छस्थग्रन्थिबाहूद्भवभुजयुगलोल्लासिमालाभिरामम् ॥३॥**
**कक्ष्यासम्बद्धवैश्याहिपयुगललसच्चन्द्रतीव्रांशुलीला-**
**घण्टाटोपाकुलाशादशकपतिकुलं वैरिसङ्घैककालम्।**
**पाशाकारांसलोलद्वृषलकुलभवाशीर्विषाधीशभोग-**
**स्फूर्जत्फूत्कारघोरं खुरपुटनिकरक्षुण्णसर्वंसहं तम् ॥४॥**

**भक्षयन्तं पक्षिरूपं भक्तानां वैरिसञ्चयम्। शरभं शाल्वरूपं च ध्यायेदेकाग्रमानसः ॥५॥**

**इति शरभरूपं शिवं ध्यात्वा 'ॐनमो भगवते शरभशाल्वाय हसकलह्रीं पक्षिराजाय हसकहलह्रीं मम शत्रून् नाशयनाशय सकलह्रीं घघहुंफट् स्वाहा' इति मन्त्रं जपेत्।**

**३. शरभ प्रयोग**—प्रातःकृत्य, प्राणायाम के बाद इस प्रकार न्यास करे— शिरसि ब्रह्मणे ऋषये नमः, मुखे पंक्त्यै छन्दसे नमः, हृदये शरभशाल्वाय पक्षिराजाय देवतायै नमः। इस प्रकार न्यास करके अपने अभीष्टसिद्धि के लिये विनियोग किया जाता है। तदनन्तर ॐ नमो भगवते हृदयाय नमः, शरभशाल्वाय शिरसे स्वाहा, पक्षिराजाय शिखायै वषट्, मम शत्रून्नाशय नाशय कवचाय हुं, हुंफट् नेत्रत्रयाय वौषट्, स्वाहा अस्त्राय फट्—इस प्रकार न्यास करके निम्नवत् ध्यान करे—

अष्टापदं पक्षतिमूलराजद्वज्राङ्कुरं हाटकपक्षकूटम्। हेमाङ्गमङ्गीकृतपद्मरागं चञ्चूपुटोल्लासिमुखारबिन्दम्।।
सूर्यानलेन्दुद्युतिराजमाननेत्रत्रयोल्लासितपद्मरागम्। नीलाश्मदीप्ताखिलरोमसङ्घं शीतांशुखण्डोज्ज्वलितोत्तमाङ्गम्।।
विप्राहिद्वन्द्वबद्धोत्तमकपिलजटाभारसञ्चारिगङ्गासङ्गाक्रान्तोत्तमाङ्गात् क्रमगलितपृषत्सङ्घहाराभिरामम्।।
अग्रोद्यन्नागबन्धक्रमघटितसटाग्रन्थिपञ्चाङ्गुलोद्यत्पुच्छस्थग्रन्थिबाहूद्भवभुजयुगलोल्लासिमालाभिरामम् ।।
कक्ष्यासम्बद्धवैश्याहिपयुगललसच्चन्द्रतीव्रांशुलीलाघण्टाटोपाकुलाशादशकपतिकुलं वैरिसङ्घैककालम्।।
पाशाकारांसलोलद्वृषलकुलभवाशीर्विषाधीशभोगस्फूर्जत्फूत्कारघोरं खुरपुटनिकरक्षुण्णसर्वंसहं तम्।।
भक्षयन्तं पक्षिरूपं भक्तानां वैरिसञ्चयम्। शरभं शाल्वरूपं च ध्यायेदेकाग्रमानसः।।

ध्यान के बाद इस मन्त्र का जप करे—ॐनमो भगवते शरभशाल्वाय हसकलह्रीं पक्षिराजाय हसकहलह्रीं मम शत्रून् नाशयनाशय सकलह्रीं घघहुंफट् स्वाहा।

**अथ प्रासादमन्त्रस्य प्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि वामदेवाय ऋषये नमः, मुखे पंक्तिच्छन्दसे नमः, हृदये श्रीसदाशिवाय देवतायै नमः, गुह्ये हंबीजाय नमः, पादयोः औं शक्तये नमः, इति विन्यस्य मम सर्वाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, हां हृदयाय नमः, हीं शिरसे स्वाहा, हूं शिखायै वषट्, हैं कवचाय हुम्, हौं नेत्रत्रयाय वौषट्, हः अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—**

**ध्यायेद्देवं ततो वत्स हृदि चैकाग्रमानसः। सिन्दूरपुञ्जशोणाङ्गं स्मेरवक्त्रं त्रिलोचनम्॥१॥**
**मणिमौलिलसच्चन्द्रकलालंकृतमस्तकम्। दक्षिणोर्ध्वकरे टङ्कं दधानं तदधो वरम्॥२॥**
**वामोर्ध्वहस्ते हरिणं तदधोऽभयमादरात्। पीनवृत्तघनोत्तुङ्गस्तनाग्रे विनिवेश्य च॥३॥**
**वामाङ्के सन्निविष्टायाः प्रियाया रक्तपङ्कजे। दधत्या दक्षिणे हस्ते चासीनं रक्तपङ्कजे॥४॥**
**नानाभरणसन्दीप्तं दिव्यगन्धस्रगम्बरम्।**

**इति ध्यात्वा—'ॐ हौं हसकलह्रीं ह्रीं हसकहलह्रीं नमः सकलह्रीं शिवाय' इति मन्त्रं जपेत्।**

**४. प्रासाद मन्त्र का प्रयोग**—प्रातःकृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—शिरसि वामदेवाय ऋषये नमः, मुखे पंक्तिच्छन्दसे नमः, हृदये श्रीसदाशिवाय देवतायै नमः, गुह्ये हंबीजाय नमः, पादयोः औं शक्तये नमः। इस प्रकार न्यास करके अपने अभीष्टसिद्धि के लिये विनियोग किया जाता है। तदनन्तर हां हृदयाय नमः, हीं शिरसे स्वाहा, हूं शिखायै वषट्, हैं कवचाय हुम्, हौं नेत्रत्रयाय वौषट्, हः अस्त्राय फट्—इस प्रकार न्यास करके निम्नवत् ध्यान करे—

सिन्दूरपुञ्जशोणाङ्गं स्मेरवक्त्रं त्रिलोचनम्। मणिमौलिलसच्चन्द्रकलालंकृतमस्तकम्।।
दक्षिणोर्ध्वकरे टङ्कं दधानं तदधो वरम्। वामोर्ध्वहस्ते हरिणं तदधोऽभयमादरात्।।
पीनवृत्तघनोत्तुङ्गस्तनाग्रे विनिवेश्य च। वामाङ्के सन्निविष्टायाः प्रियाया रक्तपङ्कजे।।
दधत्या दक्षिणे हस्ते चासीनं रक्तपङ्कजे। नानाभरणसन्दीप्तं दिव्यगन्धस्रगम्बरम्।।

ध्यान के बाद इस मन्त्र का जप करे—ॐ हौं हसकलह्रीं ह्रीं हसकहलह्रीं नमः सकलह्रीं शिवाय।

**अथ पाशुपतास्त्रस्य प्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्रायाणामत्रयं कृत्वा शिरसि वामदेवाय ऋषये नमः, मुखे पंक्तिच्छन्दसे नमः, हृदये श्रीपशुपतये देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, ॐ हुंफट् हृदयाय नमः, श्लीं हुंफट् शिरसे स्वाहा, प हुंफट् शिखायै वषट्, शु हुंफट् कवचाय हुं, हुं हुंफट् नेत्रत्रयाय वौषट्, फट् हुं फट् अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—**

**ध्यायेत् पशुपतिं सम्यङ्मन्त्री चैकाग्रमानसः। पञ्चवक्त्रं दशभुजं प्रतिवक्त्रं त्रिलोचनम् ॥१॥**
**अग्निज्वालानिभश्मश्रुसंयुतं भीमदंष्ट्रकम्। खड्गं बाणानक्षसूत्रं शक्तिं परशुमेव च ॥२॥**
**दधानं दक्षिणैर्हस्तैरूर्ध्वादिक्रमतो गुरुम्। खेटचापौ कुण्डिकां च त्रिशूलं ब्रह्मदण्डयुक् ॥३॥**
**वामहस्तैश्च बिभ्राणं मध्याह्नार्कसमप्रभम्। नानाभरणसन्दीप्तं पन्नगेन्द्रैरलंकृतम् ॥४॥**
**स्फटिकौघनिभं शान्तं सर्वरक्षाकरं स्मरेत्। इति।**

**एवं ध्यात्वा 'ॐश्लीं हसकलह्रीं पशु हसकहलह्रीं हुं सकलह्रीं फट्' इति मन्त्रं जपेत्।**

**५. पाशुपतास्त्र प्रयोग**—प्रातःकृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—शिरसि वामदेवाय ऋषये नमः, मुखे पंक्तिच्छन्दसे नमः, हृदये श्रीपशुपतये देवतायै नमः। इस प्रकार न्यास करके अपने अभीष्टसिद्धि के लिये विनियोग किया जाता है। तदनन्तर ॐ हुंफट् हृदयाय नमः, श्लीं हुंफट् शिरसे स्वाहा, प हुंफट् शिखायै वषट्, शु हुंफट् कवचाय हुं, हुं हुंफट् नेत्रत्रयाय वौषट्, फट् हुं फट् अस्त्राय फट्—इस प्रकार न्यास करके निम्नवत् ध्यान करे—

पञ्चवक्त्रं दशभुजं प्रतिवक्त्रं त्रिलोचनम्। अग्निज्वालानिभश्मश्रुसंयुतं भीमदंष्ट्रकम्।।
खड्गं बाणानक्षसूत्रं शक्तिं परशुमेव च। दधानं दक्षिणैर्हस्तैरूर्ध्वादिक्रमतो गुरुम्।।
खेटचापौ कुण्डिकां च त्रिशूलं ब्रह्मदण्डयुक्। वामहस्तैश्च बिभ्राणं मध्याह्नार्कसमप्रभम्।।
नानाभरणसन्दीप्तं पन्नगेन्द्रैरलंकृतम्। स्फटिकौघनिभं शान्तं सर्वरक्षाकरं स्मरेत्।।

ध्यान के बाद इस मन्त्र का जप करे—ॐ श्लीं हसकलह्रीं पशु हसकहलह्रीं हुं सकलह्रीं फट्।

**अथ दक्षिणामूर्तिमन्त्रस्य प्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि शुकाय ऋषये नमः, मुखे गायत्रीछन्दसे नमः, हृदये श्रीदक्षिणामूर्तये देवतायै नमः, गुह्ये ॐ बीजाय नमः, पादयोः ह्रीं शक्तये नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा मूलमन्त्रेण करशुद्धिं विधाय, ॐ ह्रां दक्षिणामूर्तये ह्रां हृदयाय नमः, ॐ ह्रीं तुभ्यं ह्रीं शिरसे स्वाहा, ॐ ह्रीं वटमूलनिवासिने ह्रूं शिखायै वषट्, ॐह्रीं ध्यानैकनिरताङ्गाय ह्रैं कवचाय हुं, ॐह्रीं नमो रुद्राय ह्रौं नेत्रत्रयाय वौषट्, ॐ ह्रीं शम्भवे ह्रः अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—**

**वटविटपिसमीपे भूमिभागे निषण्णं सकलमुनिजनानां ज्ञानदातारमारात्।**
**त्रिभुवनगुरुमीशं दक्षिणामूर्तिरूपं जननमरणदुःखच्छेददक्षं नमामि ॥१॥**

**इति ध्यात्वा, 'ॐह्रीं दक्षिणामूर्तये तुभ्यं हसकलह्रीं वटमूलनिवासिने हसकहलह्रीं ध्यानैकनिरताङ्गाय सकलह्रीं नमो रुद्राय शम्भवे ह्रीं ॐ' इति मन्त्रं जपेत्।**

**६. दक्षिणामूर्ति मन्त्र-प्रयोग**—प्रातःकृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—शिरसि शुकाय ऋषये नमः, मुखे गायत्रीछन्दसे नमः, हृदये श्रीदक्षिणामूर्तये देवतायै नमः, गुह्ये ॐ बीजाय नमः, पादयोः ह्रीं शक्तये नमः। इस प्रकार न्यास करके अपने अभीष्टसिद्धि के लिये विनियोग किया जाता है। तदनन्तर मूल मन्त्र से करशुद्धि करके ॐ ह्रां दक्षिणामूर्तये ह्रां

हृदयाय नमः, ॐ ह्रीं तुभ्यं ह्रीं शिरसे स्वाहा, ॐ ह्रीं वटमूलनिवासिने ह्रूं शिखायै वषट्, ॐह्रीं ध्यानैकनिरताङ्गाय ह्रैं कवचाय हुं, ॐह्रीं नमो रुद्राय ह्रौं नेत्रत्रयाय वौषट्, ॐ ह्रीं शम्भवे ह्रः अस्त्राय फट् से न्यास करे। इसके पश्चात् निम्नवत् ध्यान करे—

वटविटपिसमीपे भूमिभागे निषण्णं सकलमुनिजनानां ज्ञानदातारमारात्।
त्रिभुवनगुरुमीशं दक्षिणामूर्तिरूपं जननमरणदुःखच्छेददक्षं नमामि।।

ध्यान के बाद इस मन्त्र का जप करे—ॐह्रीं दक्षिणामूर्तये तुभ्यं हसकलह्रीं वटमूलनिवासिने हसकहलह्रीं ध्यानैकनिरताङ्गाय सकलह्रीं नमो रुद्राय शम्भवे ह्रीं ॐ।

**अथ मृत्युञ्जयस्य प्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि कहोलाय ऋषये नमः, मुखे निचृद्गायत्रीच्छन्दसे नमः, हृदये श्रीमृत्युञ्जयाय देवतायै नमः, गुह्ये ॐबीजाय नमः, पादयोः सः शक्तये नमः, नाभौ जूं कीलकाय नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा मूलमन्त्रेण करशुद्धिं विधाय, सां हृदयाय नमः, सीं शिरसे स्वाहा, सूं शिखायै वषट्, सैं कवचाय हूं, सौं नेत्रत्रयाय वौषट्, सः अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—**

**ध्यायेद्देवं ततो वत्स समाहितमनाश्चिरम्। शुद्धस्फटिकसङ्काशं शुभ्रपद्मासनस्थितम् ।।१।।**
**कपर्दमौलिविलसच्चन्द्रखण्डच्युतामृतैः । अभिषिक्तसमस्ताङ्गमर्केन्द्वनललोचनम् ।।२।।**
**दक्षिणोर्ध्वकरे मुद्रां ज्ञानाख्यां तदधःकरे। अक्षमालां च वामोर्ध्वे पाशं वेदमधःकरे ।।३।।**
**दधानं चिन्तयेद्देवं मृत्युरोगभयापहम्।**

**इति ध्यात्वा, 'ॐ हसकलह्रीं जूं हसकहलह्रीं सः सकलह्रीं' इति मन्त्रं जपेत्।**

**७. मृत्युञ्जय मन्त्र प्रयोग**—प्रातःकृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—शिरसि कहोलाय ऋषये नमः, मुखे निचृद्गायत्रीच्छन्दसे नमः, हृदये श्रीमृत्युञ्जयाय देवतायै नमः, गुह्ये ॐबीजाय नमः, पादयोः सः शक्तये नमः, नाभौ जूं कीलकाय नमः, इस प्रकार न्यास करके अपने अभीष्टसिद्धि के लिये विनियोग किया जाता है। तदनन्तर मूल मन्त्र से करशुद्धि करके सां हृदयाय नमः, सीं शिरसे स्वाहा, सूं शिखायै वषट्, सैं कवचाय हूं, सौं नेत्रत्रयाय वौषट्, सः अस्त्राय फट् से न्यास करे। इसके पश्चात् निम्नवत् ध्यान करे—

शुद्धस्फटिकसङ्काशं शुभ्रपद्मासनस्थितम्। कपर्दमौलिविलसच्चन्द्रखण्डच्युतामृतैः।।
अभिषिक्तसमस्ताङ्गमर्केन्द्वनललोचनम्। दक्षिणोर्ध्वकरे मुद्रां ज्ञानाख्यां तदधःकरे।।
अक्षमालां च वामोर्ध्वे पाशं वेदमधःकरे। दधानं चिन्तयेद्देवं मृत्युरोगभयापहम्।।

ध्यान के बाद इस मन्त्र का जप करे—ॐ हसकलह्रीं जूं हसकहलह्रीं सः सकलह्रीं।

**अथ दशाक्षरस्य प्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि ब्रह्मणे ऋषये नमः, मुखे विराट्छन्दसे नमः, हृदये सदाशिवाय देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा ॐ हृदयाय नमः, नमः शिरसे स्वाहा, भगवते शिखायै वषट्, रुद्राय कवचाय हुं, ॐ नमो भगवते नेत्रत्रयाय वौषट्, रुद्राय अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—**

**आकीर्णं दिव्यभोगैरमरदितिसुतैरर्चितं शैलकन्यादेहार्धं**
**धारयन्तं स्फटिकमणिनिभं व्याघ्रचर्मोत्तरीयम्।**
**द्वैपीं कृत्तिं वसानं हिमकिरणकलाशेखरं नीलकण्ठं**
**हृष्टं व्याप्तं कलाभिर्धृतकपिलजटं भावयेऽहं महेशम् ।।१।।**

**इति ध्यात्या 'ॐहसकलह्रीं नमो हसकहलह्रीं भगवते सकलह्रीं रुद्राय' इति जपेत्।**

**८. दशाक्षर रुद्रमन्त्र प्रयोग**—प्रात:कृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—शिरसि ब्रह्मणे ऋषये नम:, मुखे विराट्छन्दसे नम:, हृदये सदाशिवाय देवतायै नम:, इस प्रकार न्यास करके अपने अभीष्टसिद्धि के लिये विनियोग किया जाता है। तदनन्तर इस प्रकार न्यास करे—ॐ हृदयाय नम:, नम: शिरसे स्वाहा, भगवते शिखायै वषट्, रुद्राय कवचाय हुं, ॐ नमो भगवते नेत्रत्रयाय वौषट्, रुद्राय अस्त्राय फट्। इसके पश्चात् निम्नवत् ध्यान करे—

आकीर्णं दिव्यभोगैरमरदितिसुतैरर्चितं शैलकन्यादेहार्धं धारयन्तं स्फटिकमणिनिभं व्याघ्रचर्मोत्तरीयम्।
द्वैपीं कृत्तिं वसानं हिमकिरणकलाशेखरं नीलकण्ठं हृष्टं व्याप्तं कलाभिर्धृतकपिलजटं भावयेऽहं महेशम्।।

ध्यान के बाद इस मन्त्र का जप करे—ॐहसकलह्रीं नमो हसकहलह्रीं भगवते सकलह्रीं रुद्राय।

### सौरदर्शनमन्त्राणामृष्यादिन्यासध्यानानि

**अथ सौरदर्शनविधानम्। तत्रादौ घृणिमन्त्रस्य प्रयोग:—तत्र प्रात:कृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा शिरसि देवभागाय ऋषये नम:, मुखे गायत्रीच्छन्दसे नम:, हृदये श्रीसूर्याय देवतायै नम: इति विन्यस्य ममाभीष्टसिद्धये जपे विनियोग:, इति कृताञ्जलिरुक्त्वा सत्यतेजोज्वालामणि हुंफट्, स्वाहा हृदयाय नम:, ब्रह्मतेजोज्वालामणि हुंफट् स्वाहा शिरसे स्वाहा, विष्णुतेजोज्वालामणि हुंफट् स्वाहा शिखायै वषट्, रुद्रतेजोज्वालामणि हुंफट् स्वाहा कवचाय हुं, अग्नितेजोज्वालामणि हुंफट् स्वाहा नेत्रत्रयाय वौषट्, सर्वतेजोज्वालामणि हुंफट् स्वाहा अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—**

**रक्ताब्जयुग्माभयदानहस्तं केयूरहाराङ्गदकुण्डलाढ्यम्।**
**माणिक्यमौलिं दिननाथमीडे बन्धूककान्तिं विलसत्त्रिनेत्रम्।।१।।**

**इति ध्यात्वा 'घृणि: हसकलह्रीं सूर्य हसकहलह्रीं आदित्य सकलह्रीं ॐ' इति मन्त्रं जपेत्।**

**१. घृणि मन्त्र**—प्रात:कृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—शिरसि देवभागाय ऋषये नम:, मुखे गायत्रीच्छन्दसे नम:, हृदये श्रीसूर्याय देवतायै नम:। इस प्रकार न्यास करके अपने अभीष्टसिद्धि के लिये विनियोग किया जाता है। तदनन्तर षडङ्ग न्यास करे—सत्यतेजोज्वालामणि हुंफट् स्वाहा हृदयाय नम:, ब्रह्मतेजोज्वालामणि हुंफट् स्वाहा शिरसे स्वाहा, विष्णुतेजोज्वालामणि हुंफट् स्वाहा शिखायै वषट्, रुद्रतेजोज्वालामणि हुंफट् स्वाहा कवचाय हुं, अग्नितेजोज्वालामणि हुंफट् स्वाहा नेत्रत्रयाय वौषट्, सर्वतेजोज्वालामणि हुंफट् स्वाहा अस्त्राय फट्। इसके पश्चात् निम्नवत् ध्यान करे—

रक्ताब्जयुग्माभयदानहस्तं केयूरहाराङ्गदकुण्डलाढ्यम्। माणिक्यमौलिं दिननाथमीडे बन्धूककान्तिं विलसत्त्रिनेत्रम्।।

ध्यान के बाद इस मन्त्र का जप करे—घृणि: हसकलह्रीं सूर्य हसकहलह्रीं आदित्य सकलह्रीं ॐ।

**अथ षडर्णस्य प्रयोग:—तत्र प्रात:कृत्यादियोगपीठन्यासान्ते शिरसि ब्रह्मणे ऋषये नम:, मुखे गायत्रीछन्दसे नम:, हृदये श्रीसवित्रे देवतायै नम:, इति विन्यस्य ममाभीष्टसिद्धये विनियोग:, इति कृताञ्जलिरुक्त्वा, सूक्ष्मरूपाय स्वाहा हृदयाय नम:, सूक्ष्मतेजसे स्वाहा शिरसे स्वाहा, सूक्ष्माकाराय स्वाहा शिखायै वषट्, सूक्ष्मबालाय स्वाहा कवचाय हुं, सूक्ष्मकायाय स्वाहा नेत्रत्रयाय वौषट्, मूलमन्त्रमुच्चार्य अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—**

**रक्तपद्मद्वयं हस्तैर्बिभ्राणं वरदाभये। बन्धूकाभं त्रिनेत्रं च रविं ध्यायेत्सुभूषितम्।।१।।**

**इति ध्यात्वा 'ख हसकलह्रीं खो हसकहलह्रीं ल्काय सकलह्रीं स्वाहा' इति मन्त्रं जपेत्।**

**२. खखोल्क षडक्षर मन्त्र-प्रयोग**—प्रात:कृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—शिरसि ब्रह्मणे ऋषये नम:, मुखे गायत्रीछन्दसे नम:, हृदये श्रीसवित्रे देवतायै नम:। इस प्रकार न्यास करके अपने अभीष्टसिद्धि के लिये विनियोग किया जाता है। तदनन्तर षडङ्ग न्यास करे—सूक्ष्मरूपाय स्वाहा हृदयाय नम:, सूक्ष्मतेजसे स्वाहा शिरसे स्वाहा, सूक्ष्माकाराय स्वाहा

शिखायै वषट्, सूक्ष्मबालाय स्वाहा कवचाय हुं, सूक्ष्मकायाय स्वाहा नेत्रत्रयाय वौषट्, मूलमन्त्रमुच्चार्य अस्त्राय फट्। इसके पश्चात् निम्नवत् ध्यान करे—

रक्तपद्मद्वयं हस्तैर्बिभ्राणं वरदाभये। बन्धूकाभं त्रिनेत्रं च रविं ध्यायेत्सुभूषितम्।।

ध्यान के बाद इस मन्त्र का जप करे—ख हसकलह्रीं खां हसकहलह्रीं ल्काय सकलह्रीं स्वाहा।

**अथ चतुर्णस्य प्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा शिरसि ब्रह्मणे ऋषये नमः, मुखे गायत्रीछन्दसे नमः, हृदये श्रीसूर्यरूपिण्यै भुवनेश्वर्ये देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा ॐ हृदयाय नमः, ह्रीं शिरसे स्वाहा, ॐ शिखायै वषट्, ह्रीं कवचाय हुं, ॐ नेत्रत्रयाय वौषट्, ह्रीं अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—**

**भास्वद्रत्नसहस्रमौलिविलसच्चन्द्रार्धमुद्द्योतयन्द्धस्ताब्जैर्दधदङ्कुशं गुणवराभीतीः सुतुङ्गस्तनम्।**
**पायाद्गालितकाञ्चनाम्बुजजपाविद्युज्ज्वलत्कान्तिभिर्विश्वं द्योतयदार्कमाश्वशिशिरं विश्वेशिकाया वपुः ॥१॥**

**इति ध्यात्वा 'ॐ हसकलह्रीं ह्रीं हसकहलह्रीं हं सकलह्रीं सः' इति मन्त्रं जपेत्।**

**३. ॐ ह्रीं हं सः चतुरक्षर मन्त्र-प्रयोग**—प्रातःकृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—शिरसि ब्रह्मणे ऋषये नमः, मुखे गायत्रीछन्दसे नमः, हृदये श्रीसूर्यरूपिण्यै भुवनेश्वर्यै देवतायै नमः। इस प्रकार न्यास करके अपने अभीष्टसिद्धि के लिये विनियोग किया जाता है। तदनन्तर षडङ्ग न्यास करे—ॐ हृदयाय नमः, ह्रीं शिरसे स्वाहा, ॐ शिखायै वषट्, ह्रीं कवचाय हुं, ॐ नेत्रत्रयाय वौषट्, ह्रीं अस्त्राय फट्। इसके पश्चात् निम्नवत् ध्यान करे—

भास्वद्रत्नसहस्रमौलिविलसच्चन्द्रार्धमुद्द्योतयद्धस्ताब्जैर्दधदङ्कुशं गुणवराभीतीः सुतुङ्गस्तनम्।
पायाद्गालितकाञ्चनाम्बुजजपाविद्युज्ज्वलत्कान्तिभिर्विश्वं द्योतयदार्कमाश्वशिशिरं विश्वेशिकाया वपुः।।

ध्यान के बाद इस मन्त्र का जप करे—ॐ हसकलह्रीं ह्रीं हसकहलह्रीं हं सकलह्रीं सः।

**अथ त्र्यक्षरस्य प्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि अजाय ऋषये नमः, मुखे गायत्रीछन्दसे नमः, हृदये श्रीसूर्याय देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा गुह्यादिपादपर्यन्तं हां नमः, कण्ठाद्गुह्यपर्यन्तं ह्रीं नमः, मूर्धादिकण्ठान्तं सः नमः, इति विन्यस्य ह्रांह्रींह्रूंह्रैंह्रौंह्रः इति करषडङ्गन्यासान् विधाय ध्यायेत्—**

**अरुणकमलसंस्थं त्रीक्षणं भूरिभूषं ह्यरुणकमलयुग्माभीष्टदाभीतिहस्तम्।**
**अरुणतरशरीरं भावयामो दिनेशं ह्यरुणकरसुसेव्यं सर्वदेवौघवन्द्यम् ॥१॥**

**इति ध्यात्वा 'ह्रां हसकलह्रीं ह्रीं हसकहलह्रीं सः सकलह्रीं' इति मन्त्रं जपेत्।**

**४. ह्रां ह्रीं सः मन्त्र प्रयोग**—प्रातःकृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—शिरसि अजाय ऋषये नमः, मुखे गायत्रीछन्दसे नमः, हृदये श्रीसूर्याय देवतायै नमः, इस प्रकार न्यास करके अपने अभीष्टसिद्धि के लिये विनियोग किया जाता है। तदनन्तर गुह्य से पादपर्यन्त हां नमः, कण्ठ से गुह्य-पर्यन्त ह्रीं नमः, मूर्धा से कण्ठपर्यन्त सः नमः—इस प्रकार न्यास करके ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः से षडङ्ग न्यास करे। इसके पश्चात् निम्नवत् ध्यान करे—

अरुणकमलसंस्थं त्रीक्षणं भूरिभूषं ह्यरुणकमलयुग्माभीष्टदाभीतिहस्तम्।
अरुणतरशरीरं भावयामो दिनेशं ह्यरुणकरसुसेव्यं सर्वदेवौघवन्द्यम्।।

ध्यान के बाद इस मन्त्र का जप करे—हां हसकलह्रीं ह्रीं हसकहलह्रीं सः सकलह्रीं।

**अथ षोडशार्णप्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि ब्रह्मणे ऋषये नमः, मुखे जगतीच्छन्दसे नमः, हृदये श्रीभास्कराय देवतायै नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः,**

**इति कृताञ्जलिरुक्त्वा, ॐ ऐं हृदयाय नमः, क्लांक्लींक्लूं शिरसे स्वाहा, ह्रां ह्रीं ह्रूं शिखायै वषट्, सः कवचाय हुं, श्रीभास्कराय नेत्रत्रयाय वौषट्, स्वाहा अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—**

**माणिक्याढ्यरथारूढं मणिकुण्डलधारिणम्। हस्तैश्चाभीष्टदं शङ्खचक्रपद्मधरं विभुम्॥१॥**
**किरीटिनं मेखलिनं कवचिं सुशरीरिणम्। नानारत्नसमोपेतं ऋषिसङ्घ्याश्वशोभितम्॥२॥**
**नक्षत्रग्रहराश्याद्यैः सेवितं मुनिमण्डलैः। सावित्र्या चैव गायत्र्या सरस्वत्या च शोभितम्॥३॥**
**नानादेवसमायुक्तं भास्करं चिन्तयेद्बुधः।**

**एवं ध्यात्वा 'ॐ ऐं हसकलह्रीं क्लांक्लींक्लूं हसकहलह्रीं ह्रांह्रींह्रूंसः सकलह्रीं श्रीभास्कराय स्वाहा' इति मन्त्रं जपेत्।**

**५. षोडशाक्षर मन्त्र-प्रयोग**—प्रातःकृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—शिरसि ब्रह्मणे ऋषये नमः, मुखे जगतीच्छन्दसे नमः, हृदये श्रीभास्कराय देवतायै नमः, इस प्रकार न्यास करके अपने अभीष्टसिद्धि के लिये विनियोग किया जाता है। तदनन्तर षडङ्ग न्यास करे—ॐ ऐं हृदयाय नमः, क्लांक्लींक्लूं शिरसे स्वाहा, ह्रां ह्रीं ह्रूं शिखायै वषट्, सः कवचाय हुं, श्रीभास्कराय नेत्रत्रयाय वौषट्, स्वाहा अस्त्राय फट्। इसके पश्चात् निम्नवत् ध्यान करे—

माणिक्याढ्यरथारूढं मणिकुण्डलधारिणम्। हस्तैश्चाभीष्टदं शङ्खचक्रपद्मधरं विभुम्॥
किरीटिनं मेखलिनं कवचिं सुशरीरिणम्। नानारत्नसमोपेतं ऋषिसङ्घ्याश्वशोभितम्॥
नक्षत्रग्रहराश्याद्यैः सेवितं मुनिमण्डलैः। सावित्र्या चैव गायत्र्या सरस्वत्या च शोभितम्॥
नानादेवसमायुक्तं भास्करं चिन्तयेद्बुधः।

ध्यान के बाद इस मन्त्र का जप करे—ॐ ऐं हसकलह्रीं क्लांक्लींक्लूं हसकहलह्रीं ह्रांह्रींह्रूंसः सकलह्रीं श्रीभास्कराय स्वाहा।

**अथ द्वादशाक्षरस्य प्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणयामत्रयं कृत्वा, शिरसि देवभागाय ऋषये नमः मुखे विराट्छन्दसे नमः, हृदये श्रीआदित्याय देवतायै नमः, इति विन्यस्य ममाभीष्टाप्तये विनियोगः, इति कृताञ्जलिरुक्त्वा ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः इति षडङ्गमन्त्रान् विन्यस्य प्राग्वद्ध्यात्वा 'ॐ आं हसकलह्रीं ह्रींश्रींघृणिः हसकहलह्रीं सूरिय सकलह्रीं आदित्य ॐ' इति मन्त्रं जपेत्।**

**६. द्वादशाक्षर मन्त्र-प्रयोग**—प्रातःकृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—शिरसि देवभागाय ऋषये नमः मुखे विराट्छन्दसे नमः, हृदये श्रीआदित्याय देवतायैं नमः। इस प्रकार न्यास करके अपने अभीष्टसिद्धि के लिये विनियोग किया जाता है। तदनन्तर ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः मन्त्रों से षडङ्ग न्यास करके पूर्ववत् ध्यान करे, तत्पश्चात् इस मन्त्र का जप करे—ॐ आं हसकलह्रीं ह्रींश्रींघृणिः हसकहलह्रीं सूरिय सकलह्रीं आदित्य ॐ।

**अथ षडक्षरस्य प्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि ब्रह्मणे ऋषये नमः, मुखे गायत्रीछन्दसे नमः, हृदये श्रीआदित्याय देवतायै नमः, इति विन्यस्य ममाभीष्टावाप्तये विनियोगः, इति कृताञ्जलिरुक्त्वा, ॐ हृदयाय नमः, श्रीं शिरसे स्वाहा, ह्रीं शिखायै वषट्, क्लीं कवचाय हुं, ग्लौं नेत्रत्रयाय वौषट, ह्रां अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य प्राग्वद्ध्यायेत् 'ॐ श्रीं हसकलह्रीं ह्रींक्लीं हसकहलह्रीं ग्लौं सकलह्रीं ह्रां' इति मन्त्रं जपेत्।**

**७. षडक्षर मन्त्र-प्रयोग**—प्रातःकृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—शिरसि ब्रह्मणे ऋषये नमः, मुखे गायत्रीछन्दसे नमः, हृदये श्रीआदित्याय देवतायै नमः। इस प्रकार न्यास करके अपने अभीष्टसिद्धि के लिये विनियोग किया जाता है। तदनन्तर षडङ्ग न्यास करे—ॐ हृदयाय नमः, श्रीं शिरसे स्वाहा, ह्रीं शिखायै वषट्, क्लीं कवचाय हुं, ग्लौं नेत्रत्रयाय

वौषट्, ह्रां अस्त्राय फट्। इसके पश्चात् पूर्ववत् ध्यान करके इस मन्त्र का जप करे—ॐ श्रीं हसकलह्रीं ह्रींक्लीं हसकहलह्रीं ग्लौं सकलह्रीं ह्रां।

**अथात्माष्टाक्षरस्य प्रयोगः—तस्य न्यासध्यानादिकं प्रागेव प्रपञ्चयागमातृकाविधानेऽभिहितम्, 'ॐ ह्रीं हसकलह्रीं हंसः हसकहलह्रीं सोऽहं सकलह्रीं स्वाहा' इति मन्त्रं जपेत्।**

**८. आत्मा अष्टाक्षर मन्त्र-प्रयोग**—इसका न्यास ध्यान आदि पूर्व में ही प्रपञ्चयाग मातृकाविधि निरूपण के समय निरूपित कर दिया गया है। इसका मन्त्र है—ॐ ह्रीं हसकलह्रीं हंसः हसकहलह्रीं सोऽहं सकलह्रीं स्वाहा।

**शाक्तदर्शनमन्त्राणामृष्यादिन्यासध्यानानि**

**अथ शाक्तदर्शनविधानम्। तत्रादौ बालामन्त्रस्य प्रयोगः—तत्र प्रातःकृत्यादियोगपीठन्यासान्ते मूलमन्त्रेण प्राणायामत्रयं कृत्वा, शिरसि दक्षिणामूर्तये ऋषये नमः, मुखे पंक्तिच्छन्दसे नमः, हृदये श्रीबालायै देवतायै नमः, गुह्ये ऐं बीजाय नमः, पादयोः सौः शक्तये नमः, नाभौ क्लीं कीलकाय नमः, इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा, ऐं हृदयाय नमः, क्लीं शिरसे स्वाहा, सौः शिखायै वषट्, ऐं कवचाय हुं, क्लीं नेत्रत्रयाय वौषट्, सौः अस्त्राय फट्, इति षडङ्गमन्त्रान् विन्यस्य ध्यायेत्—**

**भ्रमद्भ्रमरनीलाभधम्मिल्लामलपुष्पिकाम्। ब्रह्मरन्ध्रस्फुरद्भिन्नमुक्तालेखाविराजिताम्॥१॥**
**मुक्तालेखारत्नलग्नतिलकाञ्चितभालिकाम्। विशुद्धमुक्ताबिन्द्वाढ्यचन्द्ररेखाकिरीटिनीम्॥२॥**
**भ्रमद्भ्रमरनीलाभनयनत्रयराजिताम्। सूर्यभास्वन्महारत्नकुण्डलालंकृतां पराम्॥३॥**
**शुक्राकारस्फुरन्मुक्ताहारभूषणभूषिताम्। कङ्कणादिलसद्भूषामणिबन्धलसत्प्रभाम्॥४॥**
**प्रवाललतिकाकारपाणिपल्लवशोभिताम्। वज्रवैडूर्यमुक्तालिमेखलां विमलप्रभाम्॥५॥**
**रक्तोत्पलदलाकारपादपल्लवशोभिताम्। नक्षत्रमालासङ्काशमुक्तामञ्जीरमण्डिताम्॥६॥**
**वामेन पाणिनैकेन पुस्तकं चापरेण तु। अभयं च प्रयच्छन्तीं साधकाय वरानने॥७॥**
**अक्षमालां च वरदं दक्षपाणिद्वयेन तु। दधतीं चिन्तयेद्देवीं वश्यसौभाग्यवाक्प्रदाम्॥८॥**
**क्षीरकुन्देन्दुधवलां प्रसन्नां संस्मरेत् प्रिये।**

**इति ध्यात्वा 'ऐं हसकलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं' इति मन्त्रं जपेत्।**

**१. बालामन्त्र प्रयोग**—प्रातःकृत्य, प्राणायाम के बाद इस प्रकार न्यास करे—शिरसि दक्षिणामूर्तये ऋषये नमः, मुखे पंक्तिच्छन्दसे नमः, हृदये श्रीबालायै देवतायै नमः, गुह्ये ऐं बीजाय नमः, पादयोः सौः शक्तये नमः, नाभौ क्लीं कीलकाय नमः। इस प्रकार न्यास करके अपने अभीष्टसिद्धि के लिये विनियोग किया जाता है। तदनन्तर षडङ्ग न्यास करे—ऐं हृदयाय नमः, क्लीं शिरसे स्वाहा, सौः शिखायै वषट्, ऐं कवचाय हुं, क्लीं नेत्रत्रयाय वौषट्, सौः अस्त्राय फट्। इसके पश्चात् निम्नवत् ध्यान करे—

भ्रमद्भ्रमरनीलाभधम्मिल्लामलपुष्पिकाम्। ब्रह्मरन्ध्रस्फुरद्भिन्नमुक्तालेखाविराजिताम्॥
मुक्तालेखारत्नलग्नतिलकाञ्चितभालिकाम्। विशुद्धमुक्ताबिन्द्वाढ्यचन्द्ररेखाकिरीटिनीम्॥
भ्रमद्भ्रमरनीलाभनयनत्रयराजिताम्। सूर्यभास्वन्महारत्नकुण्डलालंकृतां पराम्॥
शुक्राकारस्फुरन्मुक्ताहारभूषणभूषिताम्। कङ्कणादिलसद्भूषामणिबन्धलसत्प्रभाम्॥
प्रवाललतिकाकारपाणिपल्लवशोभिताम्। वज्रवैडूर्यमुक्तालिमेखलां विमलप्रभाम्॥
रक्तोत्पलदलाकारपादपल्लवशोभिताम्। नक्षत्रमालासङ्काशमुक्तामञ्जीरमण्डिताम्॥
वामेन पाणिनैकेन पुस्तकं चापरेण तु। अभयं च प्रयच्छन्तीं साधकाय वरानने॥
अक्षमालां च वरदं दक्षपाणिद्वयेन तु। दधतीं चिन्तयेद्देवीं वश्यसौभाग्यवाक्प्रदाम्॥

